**तच्छ्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः |**
**प्रत्युवाच महातेजा मारीचो राक्षसेश्वरम् | |३-३७-१॥**

**कविपरिचयः –**

आदिकवेः वाल्मीकेः परिचयं, काव्यवैशिष्ट्यञ्च लिखन्तु ।

**सन्धिविच्छेदः –**

तत् श्रुत्वा राक्षसेन्द्रस्य वाक्यं वाक्यविशारदः । प्रत्युवाच महातेजाः मारीचः राक्षसेश्वरम् ।

**अन्वयक्रमः –**

राक्षसेन्द्रस्य तत् वाक्यं श्रुत्वा वाक्यविशारदः महातेजाः मारीचः राक्षसेश्वरं प्रत्युवाच ।

**प्रतिपदार्थः –**

राक्षसेन्द्रस्य = रावणस्य; तत् वाक्यं = अदः वचः; श्रुत्वा = आकर्ण्य; वाक्यविशारदः = वाक्पटुः; महातेजाः = महाद्युतिमान्; मारीचः = मारीचमुनिः; राक्षसेश्वरं = रावणम्; प्रत्युवाच = प्रत्यवदत् ।

**तात्पर्यम् –**

रावणस्य अदः वचः श्रुत्वा वाक्पटुः, द्युतिमान्, मारीचमुनि रावणम् इत्थं प्रत्यवदत् ।

**व्याकरणम् –**

**नामवाचकशब्दाः** – (लिङ्गविभक्तिवचनसहितं यथा –)

राक्षसेन्द्रस्य – पुंलिङ्गशब्दः; षष्ठी विभक्तिः; एकवचनम् ।

(एवम् अन्ये लेखनीयाः ।)

**सर्वनामशब्दाः** – (लिङ्गविभक्तिवचनसहितं यथा –)

(एवम् अन्ये लेखनीयाः ।)

तत् –नपुंसकलिङ्गः; (अत्र) द्वितीया विभक्तिः; एकवचनम् ।

**क्रियापदम् –**

प्रत्युवाच – 'प्रति' उपसर्गपूर्वक 'वचँ' धातोः लिट् लकारः; प्रथमपुरुषः; एकवचनम्; अदादिगणः ।

**अव्ययानि –**

श्रुत्वा – 'श्रु' धातोः 'क्त्वा' प्रत्ययः ।

**सन्धयः –**

राक्षसेन्द्रस्य = राक्षस + इन्द्रस्य (गुणसन्धिः) ।

प्रत्युवाच = प्रति + उवाच (यणादेशसन्धिः) ।

**समासाः –**

राक्षसेन्द्रस्य = राक्षसानाम् इन्द्रः (षष्ठीतत्पुरुषः); तस्य ।

वाक्यविशारदः = वाक्येषु विशारदः (सप्तमीतत्पुरुषसमासः) ।

महातेजा = महत् तेजः यस्य सः (बहुव्रीहिसमासः) ।

**अलङ्कारः** – अनुप्रासः ।

**छन्दः/वृत्तम्** – अनुष्टुप् ।

---